॥ श्रीसीतारामचन्द्राभ्यां नमः ॥
॥ श्रीमते रामानन्दाचार्याय नमः ॥
॥ श्रीमद्गोस्वामितुलसीदासाय नमः ॥

## इन्द्रकृत

# ॥ सीतास्तुतिः ॥

*This text has been prepared by*
*Vishal Pandey (B.Tech IIT Kanpur)*
*with the blessings of*
***Citrakūṭa Tulāsīpīṭhādhiśvara***
***Jagadguru Rāmānandācārya***
***Śrī Svāmī Rāmabhadrācārya***

**इन्द्र उवाच**

मदाधिपत्यं कियदेतदस्ति यस्मिन्नहं नाम तथापि मातः।
सेयं भवत्याः सुदुरन्तमाया नो चेत्कथं वै प्रभजामि न त्वाम्॥ १॥

ब्रह्मादयो लोकपालाः समग्रास्त्वदङ्घ्रिपङ्केरुहधूलिधूसराः।
लुठन्ति ते धाम्नि शुभे प्रमुद्वनं गवां पुरीषेषु रजःसु चैव॥ २॥

तत्रापि मातः प्रविभासि नित्यं प्रमोदवल्लीवनगह्वरेषु।
अत्रापि चांशेन ततोऽवतीर्णारामेण साकं रमितुं रमाभिः॥ ३॥

यान्या अपि ब्रजभुवि प्रमदाः सहस्र श्रीरामचन्द्ररमणोत्सवलब्धकामाः।
तास्त्वत्प्रसादमधिगम्य न चेदभूषां क्वेदं सुखं हरिविरंचिशिवाद्यलभ्यम्॥ ४॥

व्यक्ता विभाति सततं बहुमूर्तिता ते एकैव यद्रमसि रामरसीन्द्रयुक्ता।
कुमुद्वने प्रमुदवीथिषु नित्यधाम्नि संकेतकुञ्जमिथिलापुरि कोसलायाम्॥ ५॥

श्रीराधिकासिकिलकीर्तिसुतेतिगीतासीतासिकोसलपुरेमिथिलापुरे च।
व्यक्तं तदंशसहिता सहजेति चासि श्रीमत्प्रमोदवनवीथिषु पुर्णरूपा॥ ६॥

पूर्णैव सर्वविषयेषु वितीर्णदृष्टिर्नित्यं तथापि रमसे रसिकेन्द्रयुक्ता।
श्रीमत्प्रमोदवनवीथिषु नित्यमग्ना स्वानन्दसिन्धुलहरीगणसंगमेषु॥ ७॥

साकेतधाम्नि सुभगे सरयूतटान्तरिगन्त रंगशिशिरोपवनाभिरामे।
नत्यं स्थितैव जगतोऽन्तकरणाय मातर्भूयोऽपि सम्प्रकटितासि निजांशुभासा॥ ८॥

कल्याणिनी सुखदकल्पलता जनानां स्वाङ्घ्रिप्रसादभवभव्यसमूहभाजाम्।
भक्तिं तनोषि कृपया खलु रामचन्द्रहस्तग्रहं विदधती भवसिन्धुमध्ये॥ ९॥

न स्यास्त्वमीशि यति दत्तकरावलम्बा भक्तावलेर्विदधतीकुशलानि नित्यम्।
श्रीमन्महारसिक राजवरोऽपि किं तु कुर्वीत तेषु करुणामरुणाङ्घ्रिपद्मे ॥ १० ॥

स्वरूपभूता तव या प्रकाशशक्तिः परं सा सुविशुद्धसत्त्वा।
उदीर्णबोधा विरजस्तमस्का न यत्र मायागुणसम्भूतओघः ॥ ११ ॥

अज्ञानिनां ये गमकास्ते न सन्ति लोभादयस्तव देहानुबन्धाः।
तथापि दर्पं शमयस्यासुराणा धर्मावगुप्तिं कुरुषे च स्वभावात्॥ १२ ॥

त्वं कालरूपा त्वमसि श्रीः सुधा त्वं माता पिताजगतस्त्वं हि तेषु।
लीलावतारैर्जयसि क्रीडसि त्वं नानास्वरूपैः सह पत्या रमेत ॥ १३ ॥

त्वं भक्तिरूपाखिलजीवजुष्टा प्रवर्तयस्यार्यपथं कृपाढ्ये।
वेदार्थसारज्ञबुधावलीभिः प्रायः प्रपन्ना निजरूपलब्धये ॥ १४ ॥

ब्रह्माण्डवर्गेमद्विधाः कोटिशस्ते गायन्ति कीर्तिं विपुलप्रणादम्।
दृष्ट्वा विभूतिं तव भूरिभाग्ये न कस्य जायेत हि मानभङ्गः ॥ १५ ॥

आविर्भवन्ती भुवने भ्राजसे त्वं शमाय दैतेयजभूभरस्य।
तथैव पादाम्बुजमाधुरीजुषां भवायवर्गाय सता मुनीनाम्॥ १६ ॥

तुभ्यं नमो भगवत्यै पुरुष्यै श्रीजानक्यै श्रीसहजाधिकायै।
अप्राकृतं सत्वमुपाददाना या क्षेममेतस्य करोषि तस्यै ॥ १७ ॥

यः कृष्णनामा भगवान् यशोऽदागर्भैकरत्नं भविता द्वापरान्ते।
सोऽपि त्वदंशेन समृद्धकामो भवायवर्गं स्वजुषां संविधाता ॥ १८ ॥

श्रीरामचन्द्रोऽजनि राजमौलेरघुप्रवीराद्दशवक्रादिहन्ता।
सो वै त्वदीयाधरपीयूषधारावशीकृतः क्रीत एव त्वयाम्ब ॥ १९ ॥

स्वच्छन्दलीलावपुषे विशुद्धविज्ञानमूर्त्यै करुणात्मिकायै।
सर्वात्मिकायै सर्वबीजप्रदायै नमो नमः सर्वभूतात्मने ते॥ २०॥

न ज्ञायते ते जननि स्वरूपमस्मादृशैस्तव भाव्यानुबद्धैः।
तेषां कृपाहेतव एतदेव प्रकाशितं निजरूपं भवत्या॥ २१॥

त्वयानिजानुग्रहभाजनीकृताः सुरेश्वरा मादृशाः कोटिशोऽद्य।
न चेत्कथ दृश्यरूपास्यमीभिर्निरंजना निर्गुणा त्वं निरीहा॥ २२॥

त्वं जानकी जनकस्यालयेऽद्य त्वं श्रीः परा सहजा त्व कलेश्वरी।
स्वयोगशक्त्या बहुधा त्वं विभासि त्वया सनाथा वयमद्धा समस्ताः॥ २३॥

त्वमीश्वरीदेवि चराचरस्य त्वं नः पतीनां पतिरप्रमेया।
धराधर्मश्रुतिकोविप्रदेवरक्षाकरी जयतात्केवलैव ॥ २४॥

**लक्ष्मण उवाच**

इत्युक्त्वा देवराजस्तां सुरभीस्तननिर्गतैः।
अभ्यषिञ्चत्सरभसं पयोभिरमृतोपमैः॥ २५॥

ऐरावतकरानीतव्योमगङ्गापयोभरैः।
मन्दारकुसुमस्तोममकरन्दसुगन्धिभिः॥ २६॥

सौराज्यं चैव साम्राज्यं सर्वैश्वर्यमहापदम्।
आधिराज्यं महाराज्यं दत्त्वा तस्यैपरश्रिये॥ २७॥

तदीयचरणाम्भोजमकरन्दसुनिर्वृतः।
कृतार्थं मन्यमानं स्वं निजलोकमुपाव्रजत्॥ २८॥

**इति श्रीमदादिरामायणे ब्रह्मभुशुण्डसंवादे पश्चिमखण्डे भरतलक्ष्मणीये सीताजन्मोत्सवे विंशोऽध्यायः॥ २०॥**